

## ओण्टिमिट्ट
## श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः

2024 एप्रिल् 17 तः 25 पर्यन्तम्

१७-०४-२०२४ सौम्यवासरः

प्रातः - ध्वजारोहणम्, रात्रौ - शेषवाहनम्

१८-०४-२०२४ बृहस्पतिवासरः

प्रातः - वेणुगानालङ्कारः, रात्रौ - हंसवाहनम्

१९-०४-२०२४ भृगुवासरः

प्रातः - वटपत्रशायिनः अलङ्कारः रात्रौ - सिंहवाहनम्

२०-०४-२०२४ मन्दवासरः

प्रातः - नवनीतकृष्णस्य अलङ्कारः रात्रौ - हनुमत्सेवा

२१-०४-२०२४ भानुवासरः

प्रातः - मोहिनी सेवा, रात्रौ - गरुडसेवा

२२-०४-२०२४ इन्दुवासरः

प्रातः - शिवधनुर्बाणालङ्कारः, रात्रौ - अभ्यागमनम्, कल्याणोत्सवः, गजवाहनम्

२३-०४-२०२४ भौमवासरः

प्रातः रथोत्सवः

२४-०४-२०२४ सौम्यवासरः

प्रातः कालियमर्दनालङ्कारः रात्रौ - अश्ववाहनम्

२५-०४-२०२४, बृहस्पतिवासरः

प्रातः - चक्रस्नानम्, रात्रौ - ध्वजावरोहणम्



## तिरुपतिस्थ
## श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः

2024 एप्रिल् 05 तः 13 पर्यन्तम्

०५-०४-२०२४ भृगुवासरः

प्रातः - ध्वजारोहणम्, रात्रौ - महाशेषवाहनम्

०६-०४-२०२४ मन्दवासरः

प्रातः - लघुशेषवाहनम्, रात्रौ - हंसवाहनम्

०७-०४-२०२४ भानुवासरः

प्रातः - सिंहवाहनम्, रात्रौ - मौक्तिकमण्डपम्

०८-०४-२०२४ इन्दुवासरः

प्रातः - कल्पवृक्षवाहनम्, रात्रौ - सर्वभूपालवाहनम्

०९-०४-२०२४ भौम्यवासरः

प्रातः - आन्दोलिकायां मोहिन्यवतारः, रात्रौ - गरुडवाहनम्

१०-०४-२०२४ सौम्यवासरः

प्रातः - हनुमद्वाहनम्, सायं वसन्तोत्सवः, रात्रौ - गजवाहनम्

११-०४-२०२४ बृहस्पतिवासरः

प्रातः - सूर्यप्रभावाहनम्, रात्रौ - चन्द्रप्रभावाहनम्

१२-०४-२०२४ भृगुवासरः

प्रातः रथोत्सवः, रात्रौ - अश्ववाहनम्

१३-०४-२०२४, मन्दवासरः

प्रातः - चक्रस्नानम्, रात्रौ - ध्वजावरोहणम्



# गीतामृतम्

श्रीभगवानुवाच -

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि।।

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि।।

(भगवद्गीता २.२५-२६)

श्रीभगवान् उवाच हे अर्जुन!

भावः - हे महाबाहो! अयम् आत्मा इन्द्रियगोचरः न भवति। मनसा चिन्तयितुं शक्यः न भवति। रूपानण्तरं प्रपथितुयशक्यः आत्मनः एवम् स्वरूपं ज्ञात्वा शोचितुं न अर्हसि। अपि च अयं यदि च दहेन साकं जायते इति तेनैव साकं म्रियते इति यदि च यदिजानाति तथापि दुःखस्य आवश्यकता नास्ति।

# सङ्कीर्तनम्



राम दशरथराम निजसत्य-
कामा नमो नमो काकुत्स्थराम ।।राम।।

करुणानिधिराम कौसल्यानन्दनराम
परमपुरुष सीतापतिराम
शरधिबन्धनराम सवनरक्षकराम
गुरुतररविवंशकोदण्डराम ।।राम।।

दनुजहरणराम दशरथसुतराम
विनु (न) तामरस्तोत्रविजय राम
मनुजावतारराम महनीयगुणराम
अनिलजप्रियराम अयोध्याराम ।।राम।।

सुललितयशराम सुग्रीववरदराम
कलुषरावणभयङ्करराम
विलसितरघुराम वेदगोचर राम
कलितप्रताप श्रीवेङ्कटगिरिराम ।।राम।।

(अन्नमाचार्यसङ्कीर्तनम्)

सम्पादकीयम्

# सर्वलोकपूजितं सीतारामचरितम्

सनातनधार्मिकवाङ्मये श्रीमद्रामायणम् आदिकाव्यमिति जगद्विख्यातम्। महाकाव्यमिदं भारतीयसंस्कृतेः मूलाधारम्। सर्वादरणीयं रामचरितं वाल्मीकिमहर्षिः मधुराक्षरैः गीर्वाणवाण्यां रचयामास। तदारभ्य वाल्मीकिः आदिकविरिति, रामगाथा आदिकवित्वेन सुप्रथिता अभवत्।

यावत् पर्यन्तं भूमण्डले नद्यः पर्वताश्चभवन्ति तावत् पर्यन्तमपि रामायणीगाथा स्थिरं तिष्ठतीति कथनम् अस्य काव्यस्य वैशिष्ट्यं द्योतयति।

रामायणमहाकाव्यस्य कथानायकः श्रीरामचन्द्रः। तस्य नामोच्चारकं व्याधमपि महाकविम् आदिकविं च अकरोत्। पुरुषोत्तमस्य श्रीरामस्य पितृवाक्यपरिपालनम्, एकपत्नीव्रतम्, स्नेहानुरक्तिः, प्रतिज्ञापालनं, शिष्टरक्षणम् उदारता...., सीतादेव्याः पातिव्रत्यं, सहिष्णुता, धर्मनिष्ठता, दशरथस्य पुत्रप्रेम, भरतस्य सोदरस्नेहः, लक्ष्मणस्य सेवानुरक्तिः, आञ्जनेयस्य स्वामिभक्तिः, समयस्फूर्तिः ब्रह्मचर्यम् एवम् अनेके गुणाः यथा रामायणे प्रकाशिताः न तथा अन्यत्र। शिष्टसम्मतविशिष्टगुणाभिरामः श्रीरामः पुरुषोत्तमः इति प्रकीर्तितः। बहुविद्यापारङ्गतोऽपि, शिवभक्ताग्रेसरोऽपि परस्त्रीलोभेन राक्षसः अभवत्। तस्य संसर्गवशात् लङ्कापि दग्धा अभवत्। पुरुषोत्तमः श्रीरामः सर्वजनाराध्यः अभवत्। तस्य चरितं नित्यपारायणग्रन्थः अभवत्।

ग्रामे ग्रामे श्रीराममन्दिराणि विलसन्ति। श्रीरामसञ्चरितस्थानानि तीर्थक्षेत्राणि अभवन्। श्रीरामगाथा तदारभ्य अद्यापि काव्यरूपेण, नाटकरूपेण, यक्षगानादि जानपदरूपेण निरन्तरं प्रतिभाति प्रवहति। श्रीरामचन्द्रस्य अवतारदिनं श्रीरामनवमीति आचरन्ति, केचन युगादितः नवदिनानि वसन्तनवरात्रमाचरन्ति। केचन रामनवमीतः श्रीरामनवरात्रं वैभवेन आरचन्ति। ''कौसल्यासुप्रजा राम'' इति श्लोकेनैव तिरुमलक्षेत्रे भगवतः सुप्रभातसेवां निर्वर्तयन्ति। श्रीरामानुजाचार्याः अष्टादशपर्यायं रामायणस्य विविधार्थान् गुरुमुखतः श्रुत्वा रामायणरसामृतपानमकुर्वन्।

जगदभिरामः श्रीरामः सर्वेषां हृदयमन्दिरे प्रतिष्ठितः। आत्मरूपिणे रामाय जयोऽस्तु।

।। श्रीराम जय राम जय जय राम।।

# एप्रिल् २०२४

सम्पुटिः-११ सञ्चिका-०१

श्रीशोभकृत्संवत्सरस्य फाल्गुणकृष्णसप्तमी तः
श्रीक्रोधिसंवत्सरस्य चैत्रकृष्णषष्टी पर्यन्तम्-१९४४



मुखचित्रम् - तिरुमल श्रीस्वामिनः युगादि आस्थान महोत्सवः।

अन्तिमरक्षापुटः - तिरुमल श्रीस्वामिनः श्रीरामनवमि आस्थान महोत्सवः।


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -

sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-


*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका




# युगादिः



- एन्.एल्.शिवप्रसादः
चरवाणी - ९७००१४०३९०

जनः दैनन्दिनजीवने प्रतिपदे प्रकृतिमनुसरन्नपि, प्रकृतिं शक्त्या मेलयित्वा जीवितगम्यं प्राप्नुयादिति आर्षनिर्देशः। अत्र मानवानां सहायार्थमेव प्राचीनर्षिभिः कालविभागः कृतः। अस्मिन् क्रमे भारतीयानां जीवने अत्युन्नतस्य वैज्ञानिककोणस्याविष्कारः कृतः। स एव चैत्रमासः। स्थाणुभिः सह मानवजीवितानपि सचेतनान् करोति चैत्रः। अस्मिन् मासे यथा तरवः पल्लवैः प्रकाशन्ति तथैव जनानां अपकृष्टवैरुध्यवैषम्यवैमनस्येषु हृदयेषु नवजीवनकिरणाः प्रसरन्ति।

चैत्रमासस्मरणेन जनैः युगादिपर्वदिनं स्मर्यते। नववत्सरस्य सङ्केतः युगादिः। वत्सरादिः युगादिरिति किमर्थं कथ्यते? अस्य प्रमाणानि कानि? सौरचान्द्रमानयोः भेदाः के? इत्यादि चर्चां परित्यज्य युगादिपर्वदिने शास्त्रनिर्दिष्टानि कर्तव्यानि कानीति चिन्तयामः।

**युगादि वैशिष्ट्यम् :** - युगादिमहोत्सवः कर्णाटक, आन्ध्रदेशीयानां प्रसिद्धः उत्सवः वर्तते। अयमेव संवत्सरादिरिति व्यवह्रीयते। प्रतिसंवत्सरं चैत्रशुद्धप्रतिपत् दिने अयमुत्सवः प्रचलति। एष एव सर्वेषु उत्सवेषु आद्यः इति ज्ञायते। अस्मिन् दिने सार्ववर्णिकाः जनाः अभ्यंगन स्नानं कृत्वा नूतन वस्त्राभरणानि धरन्ति। अनन्तरं यजमानः पुत्र मित्र कलत्र समेतः पूजामन्दिरे देवता प्रतिमानाम् अथवा चित्रपटानां समीपे उपविश्य नूतन पञ्चाङ्गं हरिद्रा कुङ्कुमादिभिः अलङ्कृत्य पीठे निक्षिप्य पत्र पुष्प फलाक्षतैः इष्टदेवता पूजनं कुर्यात्। ततः युगादि चोष्यं (लेह्यं) सज्जीकृत्य भगवन्निवेदनं कृत्वा सर्वे प्रसादरूपेण स्वीकुर्युः।

**यद्वर्षादौ निम्बसुमं शर्कराम्ल घृतैर्युतम्।**
**भक्षितं पूर्वयामेस्यात्तद्वर्षं सौख्यदायकम्॥**

आन्ध्रदेशे प्रतिपदारभ्य नवमी पर्यन्तं रामायणपारायणं कृत्वा अन्ते सीतारामकल्याणं कुर्वन्ति। कृषकाः सीरं पूजयित्वा पञ्चवारम् अथवा नववारं क्षेत्रं प्राक्पश्चिमं कृषन्ति। वृषभान् हरिद्रा -कुङ्कुमचूर्णैः अलङ्कुर्वन्ति। केचन भस्मेन, पुष्पैः भूषयन्ति। ग्रामेषु अस्मिन् दिने क्षुद्र वा ग्रामदेवताभ्यः पशुबलिं न समर्पयन्ति। केवलं नारिकेलखण्डान् निवेदयन्ति। सुवासिनीभ्यः हरिद्राकुङ्कुमवस्त्रादीन् समर्पयन्ति।

**चारित्रक, पौराणिककथाः** - ब्रह्माण्डपुराणे सृष्टिकर्ता ब्रह्मा चैत्रशुक्लप्रतिपदि अरुणोदयसमये सर्वजगत् असृजत् इति उक्तः।

पूर्वकालेजनाः युगादि उत्सवम् आचरन्तिस्मेति भविष्यपुराणोत्तरभागे कथनात् ज्ञायते। श्रीकृष्णः धर्मराजं प्रति एवमुवाच। युगादिः कृतयुगे वैशाखमास शुक्लतृतीयायां त्रेतायुगे कार्तीक शुक्लनवम्यां द्वापरयुगे नभ त्रयोदश्यां कलियुगे माघमास पूर्णिमायां आरब्धः इति कथ्यते। एताः तिथयः युगादयः इति पण्डितैः कीर्त्यन्ते।

**''युगादयश्च कथ्यन्ते तथैताः सर्व सूरिभिः''।**

कलियुगः माघपूर्णिमायां आरब्ध इति उपर्युक्त पुराणवचनं अस्माकं न प्रमाणं, कुत इति चेत् अस्माकं युगादिः चैत्रमास प्रारम्भे प्रचलति। धर्म सिन्धुकारः निर्णयसिन्धुकारश्च युगादि पर्वदिनं संवत्सरारम्भे अनुष्ठीयमानः उत्सव इति निर्णीतवन्तौ। धर्मसिन्धुकारः विशेषेण एवमाह - ''अत्र शुक्लप्रतिपदादिः अमान्त एवमासः प्रायेण दाक्षिणात्यै राद्रीयते। धर्म सिन्धुकारः जनैः युगादि पर्वदिने अनुष्टेयानि कर्माणि एवमाह।

**''मधुश्च माधवश्च वासन्तिकावृतू''** (कृष्णयजुर्वेदे) उपर्युक्तयजुर्वेदमन्त्रात् ज्ञायते यत् संवत्सरादिः वसन्तऋतुना आरब्ध इति, वसन्तर्तो मधुः माधवः वासन्तिका इत्यादि नामानि आसन्निति ज्ञायते। परन्तु कालक्रमेण चैत्रमासप्रारम्भ एव युगादिरिति लोके व्यवह्रियते। अस्मिन् विषये हेमाद्रि पण्डितः एवमाह।

**''चैत्रमासि जगद्ब्रह्म ससर्ज प्रथमेहनि, शुक्लपक्षे समग्रन्तु तथा सूर्योदये सति।''** अर्थात् ब्रह्मदेवः चैत्रशुद्ध प्रतिपत्तिथौ जगत् सृष्टिं प्रारब्धवानिति अवगम्यते।

पण्डितभवानी प्रसादस्य ग्रन्थात् इदम् अवगम्यते यत् एष उत्सवः पारशीकाणामपि संवत्सरादिः आसीदिति, प्राचीनवेदकाले आर्याः पार्शीकाः सहजीवनं कुर्वन्तिस्म इत्यपि सूच्यते। ततः भवानी प्रसादस्य अभिप्राये एष महोत्सवः पूर्वं भारतदेशे सर्वत्र प्राचलत् इति ज्ञायते। अनन्तरं चान्द्र सौरमान भेदावनुसृत्य दक्षिण देशे चैत्रमासे उत्तरदेशे मेष सङ्क्रमण दिने एष महोत्सवः जनैः अनुष्ठितः दृश्यते। पार्शी भाषायां युगादि महोत्सवः ''नौरोज्'' (नूतन दिनं) इति व्यवह्रियते। पार्शीकानां साधारणतया एष उत्सवः मार्चिमासे प्रचलति। अर्थात् वसन्तऋतौ चैत्रमासे अस्माकं युगादि महोत्सव काले एव तेषामपि नौरोज् उत्सवः प्रचलति। ज्योतिषशास्त्ररीत्या शालिवाहनशकम् अनुसरन्तः जनाः इमम् उत्सवम् आचरन्ति। तेषु आन्ध्र-कर्णाटक-महाराष्ट्रदेशीयाः मुख्याः सन्ति।

प्राचीनकाले व्यासवाल्मीकादयः महर्षयः इतिहास पुराणागम ग्रन्थ रचनाभिः जनेषु ज्ञान वैराग्य भक्तिभावान् उत्पादयामासुः।

युगादि पर्वदिने एव पूर्वकाले ब्रह्मदेवः नूतनां सृष्टिं आरब्धवान्, तस्मिन्नेवदिने ब्रह्मदेवः देवान् तत्तत् कार्येषु नियुक्तवान्। तदारभ्य नूतनसंवत्सरादिः प्रचलति इति ब्रह्माण्डपुराणे उक्तम्। युगादि पर्वदिने एव जनाः नूतनान् व्यापारान् विद्या, उद्योग, गृहसम्बन्ध कार्याणि च आरभन्तेस्म ऐश्वर्यं, विजयं कीर्तिं च अलभन्त।



# ताळ्ळपाक अन्नमयस्य
# श्रीनिवास साक्षात्कारः

भक्ति साम्राज्यम् अपार सत्कार सदृशम्। इष्टसाक्षात्काराय अभीष्ठ सिद्ध्यर्थञ्च अनुभूयमानानां भक्तानां परितापाः अनेक विधाश्च भवन्ति। जपः केषाञ्चित् फलसिद्धि मार्गः भवति। अन्येषाम् अरण्यवासे तपः योगः इत्यादयाः मार्गाः भवेयुः। परन्तु कलियुगौ भगवन्नाम स्मरणमेव सर्वसिद्धि मार्गः भवति। अन्येषाम् अरण्य वासः, तपः, योगः इत्यादयाः मार्गाः भवेयुः। परन्तु कलियुगौ भवगन्नाम स्मरणमेव सर्वसिद्युपायः इति भागवतोत्तमैः महानुभावैः सूचितः मार्गः। अनन्य साधारणतया सङ्गीतं कामितार्थसिद्धि मार्गः भवति। आपातमधुरे सङ्गीतज्ञानां साधने, कीर्तने च अहं वसामि इति साक्षात् वैकुण्ठनाथेनैव उदीरितम्। अतः वाग्गेयकाराः भक्ति सङ्गीत मार्गमेव सिद्धिसाधनत्वेन चितवन्तः। तादृशानां पुरुषाणाम् इष्टादेवता साक्षात्कारः करतलामलक सदृशः। विविधरूपैः दृश्यमानं समस्तं विश्वं भगवतः स्वरूपमेव। किन्तु तत् परमात्मानं तेजोरूपेण चर्मचक्षुर्भिः हृदये एव साक्षात् कुर्यात् इति पुराणानि उद्घोषयन्ति। तदैव मानवजीवितस्य मुख्य प्रयोजनं भगवद्साक्षात्कारस्य मुख्यं साधनं भक्तिरेव। भगवति अनुरागं भक्तिं वा अवर्धयन्तः ज्ञानादयः निरर्थका एव भवन्ति। अत एव अन्नमय्यः भक्तिहीनस्य ज्ञानवैराग्यादिकं शवालङ्करण सदृशमिति अमन्यत।

पुराणेषु परिशील्यमानेषु वयं जानीमः यत् धृवस्य वासुदेव नामस्मरणमेव भगवद् साक्षात्कार साधनमभूत् इति। तथैव प्रह्लादस्यापि भगवान् विष्णुः नरसिंहरूपेण स्वीय साक्षात्कारं प्रदत्ततवान् इति च ज्ञायते। एते प्रह्लादादयः बालभक्ताः। अन्नमय्यस्य तु श्रीवेङ्कटेश मन्त्र एव शरणमभूत्। अमुमेव विषयम् अन्नमय्यः **अन्निमन्त्रमुलिन्दे आवहि चेनु...** इत्युक्तवान् अन्नमय्यस्य बाल्ये एव परमज्ञान सम्पद् लब्धा सः यत्किञ्चिदपि खाद्यं वस्तु तिरुमल प्रसादत्वेनैव स्वीकृतवान्। तिरुमलप्प प्रसाद भिन्नं वस्तु तस्मै नरोचते स्म। वेङ्कटपतेः नाम्न अश्रवणे तस्य निद्रापि न आगता। एषा स्थितिः अन्नमय्ये भक्तेः बाल्यावस्थायाः बीजं सूचयति। तथापि अन्नमयस्य श्रीनिवास प्रथम साक्षात्कारः कदा अभूत् इति विषये ताम्रपत्र लिखितानि अन्नमय्य सङ्कीर्तनानि एव निदर्शनानि भवन्ति।





तेलुगु मूलम्, - डा. अकेळ्ळ विभीषणशर्मा
संस्कृतानुवादः - जि.विद्यावती
चरवाणी - ८६८६१३१८३३

**स्वस्ति श्री ....... प्रत्यक्षमैतेनु॥**

इति अस्मिन् ताम्र पत्रे विद्यमानैः वचनैः अन्नमयस्य षोडश वर्ष वयसि एव श्रीवेङ्कटेश्वर साक्षात्कार अभूत् इति ज्ञायते। एतानि वचनानि परिशील्य चरित्रकारा एतद् अनुरोधेन अन्नमय्यः क्री.श. १४०८ जनिं लब्धवान् इति षोडश वर्ष वयसि क्री.श. १४२४ संवत्सरे श्रीनिवास साक्षात्कारः तस्य अभूत् इति निर्णयं कृतवन्तः। प्रतिदिनम् अन्यूनतया एकैक कीर्तनम् अन्नमय्यः कृतवान् इत्यपि अनेन निश्चतुं शक्यते।

उपचारेषु षोडश सङ्ख्यायाः प्राधान्य लाभे एतदेव प्रमाणम्। मानवानां शारीरक दशायां षोडशवर्षः अतीव प्रधानः भवति इत्यत्रापि एतदेव प्रमाणम्। संस्काराः अपि षोडश भवन्ति। वेदविप्र सम्भावनायामपि दक्षिणात्वेन १६,११६,१११६, सङ्ख्यानां प्राधान्यं जातम् इत्यपि ऊहः कर्तुशक्यते अन्नमय्यस्य षोडशवर्षवयसि भगवद्सात्कारः अत्यद्भुत जीवन सार्थक सङ्घटना भवति खलु।

अन्नमयस्य सङ्कीर्तनेषु परिशील्यमानेषु ज्ञायते यत् अन्नमयस्य श्री श्रीनिवासः त्रिविध दशासु स्वीयसाक्षात्कारं दत्तवान् इति ज्ञायते। प्रथमः स्वप्न साक्षात्कारः। ज्येष्ठानां मुखात् श्रुताः अंशाः, श्रवणादिः जातः अनुभवात्मक समन्वयः अस्मिन् साक्षात्कारे हेतुः भवेत्।

**दृश्यते ......... संशयः॥**

एतानि वचनानि स्वप्ने जायमानः भगवत् साक्षात्कारः भक्तिम् अतिदृशं करोति इति आगम वचने ज्ञायते। अन्नमयस्य भगवद् साक्षात्कारस्य प्रागेते अलिपिरि सोपानमार्गे अलिमेलुमङ्ग्याः साक्षात्कारः लब्धः। आळवार् जनाः भगवद् साक्षात्कारात् प्राक् भगवतिसाक्षात्कारे प्राप्तवन्त इति तेषां वचनज्ञायते। अत एव वैष्णवा आदौ भगवतीं दृष्ट्वैव अनन्तरं भगवद्दर्शनं कुर्वन्ति इति सम्प्रदायः। अन्नमय्यः यदा पादमार्गे श्रान्तः अभूत् तदा भगवती अलमेलुमङ्गा भगवतः प्रसादं दत्वा अन्नमयस्य श्रान्तिं तपनोदय पादप्रयाण नियमान् ज्ञापयामास इति श्रूयते। तस्मिन्नेव सन्दर्भे आशुकवितारूपेण वेङ्कटेशशतकं रचयामास इति ज्ञायते। तस्मिन्निव शतके स्वामिनः लीलाविशेषाः वर्णिताः अभूवन्। तावदेव स्वप्न साक्षात्कारमपि सः प्राप्तवान् इत्यस्य

**इप्पुडिटु......... मेलुकदिण्ट॥**

कीर्तनमेतत् पर्याप्तं स्वप्न साक्षात्कार वैभवं वर्णयितुम्। **द्वितीयं भवति अर्चावतार दर्शनम्।** अन्नमय्यः तिरुमलं गत्वा स्वयंभू मूर्ति दर्शनं प्राप्य तस्य वैभवं बहुधावर्णितवान्। बहूनि कीर्तनानि स्वामिनः वरदहस्तस्य स्वामिनः पादयुगळस्य च वर्णन पराणि भवन्ति। उदाहरणार्थम्

**इन्दरिकि .........**

एवम् उत्सवमूर्ति दर्शनमपि अन्नमय्यः प्राप्तवान् । अत एव तेषु तेषु कीर्तनेषु उत्सवमूर्तेः क्रियमाणा अनेके उत्सवा अपि वर्णिताः सन्ति।

एवम् बहुविधा साक्षात्कारं लब्धवतः अन्नमयस्य कीर्तनानि श्रोतृभिः श्रूयमाणानि श्रोतृणां तत्साक्षात्कारान् अनुभावयन्ति इत्यत्र भक्तानाम् अनुभवः प्रमाणम्। अतः कीर्तन श्रवणम् अस्माकं सिद्धिसाधनम्।

॥ओं नमो वेङ्कटेशाय॥





## फिब्रवरि २०२४ लघुप्रश्नोत्तरी समाधानानि

१.श्रावण
२.राघवेन्द्रतीर्थाः
३.दशमस्कन्धस्य
४.तमिलनाडु
५.वर्षत्रयम्
६.स्वामिपुष्करिणी
७.श्रवणा नक्षत्रे
८.अष्टम दिने
९.तरिगोण्ड वेङ्गमाम्बा
१०.कृष्णयजुर्वेदस्य
११.युधिष्ठिरः
१२.वेदव्यासेन
१३.श्री महाविष्णोः
१४.द्रौपदी
१५.माण्डवी

(तदनन्तरम्)

पुनः सूत महर्षिः एवमारब्धवान् ''हे मुनिश्रेष्ठाः वेङ्कटाद्रिः द्वापरे बहु प्रसिद्धः। कुरुक्षेत्रयुद्धसमये श्रीबलरामः तीर्थ यात्रार्थं गतः। श्री बलरामचक्रवर्तिना श्री वेङ्कटाद्रिक्षेत्रं दर्शितं सेवितं च। न केवलं एतत्, अरण्यवाससमये श्रीकृष्णः पाण्डवैः सह ''हे राजपुत्राः! अस्मिन् अरण्यवासः न केवलं दुर्भरसमयः अपि च दैवदर्शनं कृत्वा पुण्यवर्धनाय भवति। भवन्तः वेङ्कटाचलं गत्वा भगवतः श्रीवेङ्कटेश्वरस्य दर्शनं कुर्वन्तु, तत्रस्थ तीर्थेषु स्नानं अचरन्तु ततः पाप प्रक्षालनं भवति।'' इत्युवाच। पाण्डवाः तथैव कृतवन्तः। बहु कालं श्रीवेङ्कटाचले तपमाचरन्तः तत्रैव अवसन्। तेषां तपसा संतुष्टः श्रीवेङ्कटेश्वरः युधिष्ठिराय स्वप्नदर्शनं कारयित्वा युद्धे विजयिष्यसि इति अभयं दत्तवान्। पाण्डवाः तत्र तीर्थे स्नानं आचरितवन्तः इत्यतः अस्य पाण्डवतीर्थम् इति व्यवहारः।

वेङ्कटाद्रौ स्वामि पुष्करिणी तीर्थस्य प्राच्यां दिशि जराहारः, वलिघ्न इत्यादि रसायन तीर्थान्यपि सन्ति। तस्य समीप प्रदेशे एव श्रीवैकुण्ठपर्वतः अपि अस्ति। तत्र अष्टलोहात्मकं उपत्यकम् अपि अस्ति। परन्तु एतेषां दर्शनं बहु दुर्लभम्। तस्य कारणं श्रीपुष्करिण्याः सर्व दिकसु मायातिरोहित शक्तिः व्याप्ता।

श्रीवेङ्कटाद्रिः श्रीमयं इत्यतः कनकाद्रि, ज्ञान स्वरूपमित्यतः ज्ञानाद्रिः इति अन्य नामानि सन्ति।




- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२

वेङ्कटाचलमाहात्म्यं वक्तुं असमर्थोऽस्मि केवलं आदिशेषः एव समर्थः इति सूतोवाच।

सूत महर्षेः वचोभि मुग्धाः महर्षयः सर्वेऽपि ''हे महामहितात्मन् वेङ्कटाचल पर्वतस्य संबन्धिनः विशेषाः कथयतु'' इति प्रार्थितवन्तः। तेषां औत्सुक्यं ज्ञात्वा सूतः पुनः वक्तुमारब्धवान्।

पुरा जैमिनी महर्षिणा प्रोक्तं विषयमेकं वदामि श्रुणु ''त्रैतायां श्रीहरिः रामावतरं धृतवान्। अरण्यवाससमये सीतान्वेषणं कुर्वन् वेङ्कटाद्रिक्षेत्रं आगतवान्। यदा रामः अञ्जनाद्रिपर्वतःसमीपं आगतवान् तदा अञ्जना रामं तत्र आतिथ्यं स्वीकर्तुं प्रार्थितवती। रामः स्वस्य अनङ्गीकारं प्रकटितवान्। पुनः हनुमतः प्रार्थनया तत्र आतिथ्यं स्वीकृतवान्। आञ्जनेय अञ्जनाद्रेः तत्र स्थित तीर्थवैभवं च वर्णनं चकार। रामः, अञ्जनाश्रमं प्राप्य आकाशगङ्गातीर्थे स्नानं कृत्वा स्वानुष्ठानं चकार। तदनन्तरं अञ्जना रामं समर्चयत। रामः, वानराः च श्रीपुष्करिण्याः नैरृतिदिग्भागं गतवन्तः। तदा आञ्जनेयः वानरैः सह एवमुवाच ''हे मित्राणि! अत्र बहूनि फलानि सन्ति। स्वेच्छया खादन्तु'' हनूमतः वचनं श्रुत्वा वानराः संतुष्टाः। आनन्देन तत्रस्थ फलानि खादितवन्तः। वृक्षान् आरुह्य शाखाभ्यः, मधु खादितवन्तः। वानराः एकस्मात् वृक्षात् अन्यवृक्षं प्रति प्लवन्तः परस्परं फलानि क्षिपन्तः, महता कोलाहलेन क्रीडन्तः च। सर्वत्र विहरन्तः एकत्र पर्वतगह्वरं दृष्ट्वा कौतूहलेन गह्वरे प्रविष्टाः। गह्वरे गाढान्धकारः व्याप्तः। तत् सामान्यगुहान एकत्र एकं दिव्यज्योतिं दर्शितवन्तः। ज्योतिसमीपं गन्तु उद्युक्ताः। तत्रैव सुवर्णमणिमय रत्नखचित शिलातोरणं विराजते। तोरणे वैडूर्यमरकतादि रत्नैः विभूषितमस्ति। तत्रैव दिव्यसङ्गीतं श्रूयते। नृत्यमपि दृश्यते। विवध वाद्य घोषणमपि श्रूयते। एतत् सर्वं भूतले अदृष्ठपूर्वम्। एतत् सामान्य गुहा न अलौकिकम् भासते। महता दीप्तेन शोभते। गुहमध्ये अद्भुत दीप्यमान शङ्ख चक्र गदा पद्म कौमोदकी शाङ्गादि पञ्चायुधधारी श्रियःपतिः शेषतल्पे शयनं कुर्वन् अस्ति। स्वामिनः उभय पार्श्वयोः श्रीभूनीळाः अपि सन्ति।

(अनुवर्तिष्यते)

तिरुमलक्षेत्रे 16-02-2024 दिनाङ्के रथसप्तमी पर्वदिन सन्दर्भे श्रीस्वामिनः आयोजित सप्तवाहनसेवाः वैभवोत्सव दृश्याणि। अस्मिन् ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि धमरिड्डि,ऐ.डि.इ.एस्., अशेषभक्तजनाः च भागं गृहीतवन्तः।










तिरुमलतिरुपतिदेवस्थानानि

## तिरुपति श्रीकपिलेश्वरस्वामिनः 01-03-2024 तः 10-03-2024 पर्यन्तम् वैभवोपेतेन आयोजित वार्षिक ब्रह्मोत्सव दृश्यमालिका। अस्मिन् अशेषभक्तजनवाहिनी भागं गृहीतवन्तः।





















श्रीनिवसमङ्गपुरे श्रीकल्याणवेङ्कटेश्वरस्वामिनः 29-02-2024 तः 08-03-2024 पर्यन्तम् अत्यन्त वैभवोपेतेन आयोजति वार्षिक ब्रह्मोत्सव दृश्यमालिका। अस्मिन् ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारी श्री वि.वीरब्रह्मम्, ऐ.ए.एस्., अशेष भक्ताः अपि भागं गृहीतवन्तः।





















## तिरुपति, श्रीगोविन्दराजस्वामिनः प्लवोत्सवः
## 17-02-2024 तः 23-02-2024 पर्यन्तम्



तिरुमलक्षेत्रे 09-02-2024 दिनाङ्के आयोजित श्री पुरन्दरदासस्य आराधनोत्सवः।



09-03-2024 दिनाङ्के कपिलेश्वरस्वामिनः ब्रह्मोत्सव अन्तर्भागे शिवपार्वत्योः कळ्याणोत्सवः वैभवोपेतेन आयोजितः। अस्मिन् कार्यक्रमे अधिकारिणः भक्ताः च भागं गृहीतवन्तः।



10-03-2024 दिनाङ्के श्रीकाळहस्ती, ज्ञानप्रसूनाम्बा वायुलिङ्गेश्वरयोः कळ्याणोत्सवः वैभवोपेतेन आयोजितः। अस्मिन् कार्यक्रमे अधिकारिणः भक्ताः च भागं गृहीतवन्तः।



श्रीशैले श्रीभ्रमराम्बामल्लिकार्जुनस्वामिनः ब्रह्मोत्सव सन्दर्भे 04-03-2024 दिनाङ्के तिरुमल श्री वेङ्कटेश्वरस्वामिनः पक्षे पीताम्बरवस्त्राणि ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मरिड्डि महोदयः समर्पितवान्।

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

श्लो.११.

**यत्सूक्तयस्सकललोक निषेवणीयाः**
**वेदातिलङ्घिविभवा भवतापहन्त्र्यः।**
**शेषाद्रिराङ्गुणसुधाह्रदगाढमग्नाः**
**ते सूरयो दश दिशन्तु मयि प्रसादम्।।**

**ता -** भगवत्कल्याण गुणसुधाप्रवाह निरन्तर निर्मग्नमानसाः तदन्यत् किमपि अजानानाः द्रविडदेश भूषण भूताः आळ्वार् इति विख्याताः परमभक्तिसम्पन्नाः दिव्यसूरयः प्रावर्तन्त। दिव्यप्रबन्धनाम्ना विख्यातानि तेषां सुवचांसि निगम निवहापेक्षया द्रविड भाषायाम् अतिसरलतया परमपुरुष यथार्थस्वरूप निरूपणपराणि सुमधुरभक्ति भाव निर्भराणि च विराजन्ते। अत एव तानि सकलजनसंसेवनीयानि, नित्यानुसन्धेयानि च। महानुभावा दशसङ्ख्याका एते सूरयो माम् अनुगृह्णन्तु।

**सु.सौ.व्याख्या -** देवदेवस्य दिव्यमहिषीः विष्वक्सेनं च पुरतः प्रस्तुत्य, ततइदानीं शेषभूधरपतेः वेङ्कटनाथकस्य वैभवातिशयं स्वकीयाभिः दिव्यप्रबन्धगाथाभिः सङ्कीर्त्य लोकं अनुगृहीतवन्तः पराङ्कुश परकालादि दिव्यसूरयोऽत्र प्रस्तूयन्ते।

**यत्सूक्तयः -** येषां सूक्तयः। यच्छब्देन ''ते सूरय'' इति अस्मिन् श्लोके निर्दिश्यमानाः दिव्यसूरयः परामृश्यन्ते। तेषां सूक्तयः शोभनानि वचांसि। प्रीतिकरत्वेन हितकारित्वने च तेषां सूक्तित्वं सार्थकम्।



“एप्पोरुळुम् तानाय्” ति.वा.मो.२.५.४.इत्यादयः अतृप्तामृतस्वरूपभगवद्दिव्यमङ्गलविग्रहवर्णनेन तस्मिन् परां प्रीतिम् उत्पादयन्ति। तथा ‘वीडुमिन् मुत्तवुम्’ - ति.वा.मो.१.२.१.इत्यादयो भगवत् प्राप्तौ प्रतिबन्धकान् प्राकृतान् विषयभोगादीन् परित्यज्य परमप्राप्यं परमात्मान मेव आश्रयध्वम् इति हितं बोधयन्ति। चतुर्विंशति ग्रन्थनिबद्धा एताश्च चतुस्सहस्रसङ्ख्याका द्राविडगाथाः पाशुररूपाः समाहृत्य “नालायिर दिव्य प्रबन्ध’ इति कथ्यन्ते। ताश्च प्रतिसहस्रं क्रमशः मुदलायिरम् इयर्पा, पेरियतिरुमोळि, तिरुवाय्मोळि इति व्यवह्रियन्ते।

**वेदातिलङ्घिविभवाः** - वेदम् अतिलङ्घते इति वेदातिलङ्घि।ताच्छील्यार्थे वेदशब्द पूर्वकात् लघि धातोःणिनिप्रत्ययः। वेदम् अतिशय्य वर्तन्ते इत्यर्थः। तादृशे विभवो यासां ताः वेदातिलङ्घि विभवाः। विभवः द्रव्यम्। धनम् इत्यर्थः। तच्च शब्दरूपस्य दिव्यप्रबन्ध जातस्य स्पष्टतर रमणीय अर्थविशिष्टत्वमेव। वेदापेक्षया दिव्यप्रबन्धा अत्यन्त सरलतया जगत्कारणभूतस्य परस्य ब्रह्मणो यथार्थस्वरूपं, तस्य अनवधिकातिशय असङ्ख्येय कल्याण गुणाकरत्वं, तदीयं दिव्यमङ्गल विग्रह वैशिष्ट्यं च सुविशदम् अवगमयन्ति। उक्तं च विद्वद्भिः - केवल वेदाध्ययनेन ब्रह्मस्वरूपावगतिः तत्प्राप्तिश्च सुदुर्लभा इति यथा - “निगमवनेषु नितान्त चार खिन्नाः’ कृ.कर्णा.२.२८ इति। अतिगहनेषु वेदारण्येषु ब्रह्मप्राप्तये चारं चारं चरित्वाऽपि तदलभमानाः क्लेशं प्राप्तवन्तः भो ज्ञानिनः! इत्यर्थः।

दिव्यप्रबन्धेषु तावत् तिडविशुम्बेरिवळि - ति.वा.मो- १.१.७. इत्यादिभिः जगत्कारणस्य परब्रह्मणो वेदवेद्यत्वम्, सृष्ट्यादि कारणत्म् सर्वान्तर्यामित्वम् च प्रतिपाद्यते। ‘वण् पुकळ् नारणन् तिण् कळल् शेरे - ति.वा.मो-१.२.१० इत्यादिभिः परमात्मा श्रीमन्नारायण एवेति, स च अनन्तकल्याण गुण विशिष्ट इति, स एव परमप्राप्यं इति च सुस्पष्टं निर्दिश्यते। “पलपलवे आबरणम्” ति.वा.मो. २.५.६. इत्यादिभिः भगवतो दिव्यमङ्गलविग्रह विशिष्टत्वम् दिव्याभरणभूषितत्वम्, अनन्तदिव्य नामत्वं च सुविशदम् उक्तम्। “ओन्रुम् देवम्” ति.वा.मो-४.१०.१. इत्यादिभिः श्रियःपते खे परत्वं सुव्यक्तम् उक्तम्। “पत्तुडैयडियवर्केळियवन् - ति.वा.मो-१.३.१. इत्यादिभिः भक्तिमात्रप्राप्यत्वं च सनिदर्शनम् उद्बोधितम्। एतदेव हि दिव्यप्रबन्धप्रकरस्य वेदातिशायि विभवत्वं नाम।।

**भवतापहन्त्र्यः** - भवस्य भवात् वा तापः भवतापः। भवः संसारः। तन्निमित्तकः तापो व्यथा इति भावः। ‘भवो भद्रे हरे प्राप्तौ सत्ता संसार जन्मसु’ -४१.पुं व्यक्षर.वैजयन्ती। भवतापस्य हन्त्री नाशयित्री। हन धातोः कर्तरि तृजन्तात् डीप्। भवतापाः नाम जन्मजरमरणादयो शारीराः व्यथाः, इष्टानवाप्ति अनिष्टावाप्ति निमित्तक मानसिक व्यथाश्च। तन्निवारणाय जीवस्य मोक्षप्राप्तये च उत्कृष्टसाधनभूता भक्तिरेव। उक्तं च अभियुक्तैः - मोक्षसाधनसामग्र्यां भक्ति रेव गरीयसी’ इति। मोक्षप्राप्तये साधनतया नैकेषु कर्मज्ञानादि उपायेषु विद्यमनेष्वपि, तेषु भक्तिरेव परमोत्कृष्ट उपायः। बद्धजीवस्य कर्मनिमित्तकं संसारक्लेशं समूलम् उन्मूल्य भगवत्प्राप्तिरूपं मोक्षं भक्तिः प्रापयति इति भावः। तादृशी अनन्यविषया परमभक्तिरत्र दिव्यप्रबन्धेषु परिपूर्णतया अनुभूयमाना विलसति। तद्वति भक्ते “यो मे भक्तः स मे प्रियः’ भ.गी.१२.१४. इत्युक्तरीत्या भगवान् अत्यन्तं प्रीतिमान् भवति। तथा च तस्मै” तस्यैष आत्मा विवृणुते तनूं स्वाम्” कठ.२.२३. इत्युक्तरीत्या ब्रह्मप्राप्तिरूपां मुक्तिम् अनुगृह्णाति। तदुक्तं च भगवता स्वयमेव -

“भक्त्या त्वनन्यया शक्य अह मेवंविधोऽर्जुन!।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप!।। भ.गी.११.५४ इति।।

(अनुवर्तिष्यते)

# तापहारी वासुदेवः

गुरुसहस्रावधानी
डा.कडिमिल्ल वरप्रसादः
चरवाणी - ९२४७८७९६०६

**कस्तूरीतिलकं ललाटफलके वक्षस्स्थले कौस्तुभम्
नासाग्रे नवमौक्तिकं करतले वेणुं करे कंकणम्
सर्वाङ्गे हरिचन्दनं च कलयन् कण्ठे च मुक्तावलीं
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः।।**

अयं श्लोकः प्रपञ्चप्रसिद्धिं गतः। अस्मिन् श्लोके श्रीकृष्णस्य अलङ्कारवैभवं सौन्दर्यं च दृश्यते। न केवलं तत्र अलङ्कारवैभवं वा सौन्दर्यं तत्र शीतलतां च दरीदृश्यते। ललाटफलके कस्तूरीतिलकं शीतलतां ददाति। ललाटफलके यत्र तिलकधारणं क्रियते तत्रैव आज्ञाचक्रं वर्तते। गुरुस्थानमिति च कथ्यते। तस्मात् यः कृष्णस्य आज्ञां पालयति तस्य जीवितं शीतलमयं भवति नोचेत् तप्यते इति भावः। 'वक्षस्स्थले कौस्तुभम्। कौस्तुभं सागरसञ्जातम्, न केवलं सागरात्, क्षीरसागरात् संजातम्। तस्मात् तद्रत्नं शीतलताभूमिका इत्यस्मिन् विषये न कोऽपि सन्देहो जायेत। तं रत्नं वक्षसि धरति हरिः यत्र वसति लक्ष्मीः। अर्थात् कृष्णानुग्रहेण यस्य लभते धनं तेन धनेन तस्य जीवितं शीतलमयं भवति। केवल स्वीय मेधया वा परवञ्चनया वा यो धनसम्पादनं करोति तस्य जीवितं तेनैव धनेन सन्तप्यते इति ज्ञायते।



''नासाग्रे नवमौक्तिकम्' मौक्तिकस्य अधिपतिः चन्द्र इति कथ्यते। सः शीतकिरण इति सर्वे जानन्ति खलु। यावत्पर्यन्तं श्वसनक्रिया गच्छति तावत्पर्यन्तं जीवति देही। यस्य कृष्णानुग्रहं वर्तते तस्य सर्वमपि जीवितं न केवलं शीतलता सम्पूर्णं पुनरमृतमयमेव भवतीति ज्ञायते।

'करतले वेणुम्!' अनेकानि सन्तुवाद्यानि किन्तु वेणुवादनसमये मनः प्रशान्ततां गच्छति। मनसः तापं हरति वेणुवादनम्। वंशेषु मौक्तिकाः सञ्जायन्ते इति कविसमयः। अर्थात् वंशनिर्मितो वेणुरपि तापहरण निपुण इति ज्ञायते खलु। 'करे कङ्कणम्' कं कणम् इत्यस्य जलबिन्दुरित्यपि अर्थः अस्ति। 'शीतस्पर्शवत्य आपः' इति तर्कसङ्ग्रहे। अयं चमत्कार एव केवलम्। कङ्कणमित्यस्य सुवर्णभूषा इत्येव खलु प्रसिद्धार्थः। भवतु नाम। सुवर्णं तैजसम्। आकरजरूपं द्रव्यम्। 'उष्णस्पर्शवत्तेजः' इति तार्किकलक्षणम्। किन्तु आकरजरूप सुवर्णादि वस्तुषु उष्णस्पर्शः नानुभूयते। भूमेः स्पर्शकारणात् उष्णस्पर्शं विहाय अनुष्णाशीतं वहति सुवर्णम्। सुवर्णमेव धनं खलु। श्रीकृष्णाभयहस्तेन सम्पन्नो भूत्वा भक्तः अनुष्णाशीत जीवितम् अर्थादानन्दमयजीवितमनुभवतीति भावः।

'सर्वाङ्गे हरिचन्दनं च कलयन्' तापोपशमनाय चन्दनं प्रशस्तं खलु। 'कण्ठे च मुक्तावळीम्' कण्ठादेव खलु जायन्ते वाचः। भवतापहरण ज्ञानात्मक वाच एव श्रीकृष्ण कण्ठादागच्छन्ति इत्यस्य परमप्रमाणम् खलु भगवद्गीता। 'गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः'। गोपकान्तापरिवेष्टितः। गोपवनिता निरन्तरं क्षीरेण, दध्ना, नवनीतेन कालं यापयन्ति। तस्मात् सर्वा गोपिकाः तापदूराः। ताभिः परिवेष्टितत्वात् स्वयं गोपालकत्वाच्च पवित्रता, तापापनोदन सामर्थ्यं च वर्तेते श्रीकृष्णे। अतः ये जनाः सर्वदा श्रीकृष्णार्चनं ध्यानं वा कुर्वन्ति तेषां संसारतापं दूरीकरोति वासुदेवः इति निश्चप्रचम्।







# आद्यकृषकः पृथुवैन्यः

भूपालः पृथुवैन्यः नाम धरायां प्रथमः अभिषिक्त सम्राट्। प्रयागक्षेत्रे पृथुनृपस्य राजधानी आसीत्। राज्याभिषेकसमये चारणाः पृथुनृपस्य स्तुतिं गातुमुत्सुकाः। तदा पृथुः आज्ञापयत्, "तिष्ठन्तु चारणाः। यावत् मम सद्गुणाः न प्रकटीभवन्ति तावदहं न स्तोतव्यः। स्तवनं तु ईश्वरस्यैव भवेत्।" स्तुतिगायकाः पृथुनृपस्य एतादृशीं निःस्पृहतां ज्ञात्वा प्रसन्नाः अभवन्।

एकदा पृथुराजः स्वराज्ये भ्रमणम् अकरोत्। भ्रमणसमये तेन दृष्टं यत् प्रजाः अतीव कृशाः अशक्ताश्चश ताः प्रजाः पशुवज्जीवन्ति। निकृष्टान्नं खादन्ति। तद् दृष्ट्वा राजा चिन्ताकुलः जातः। तदा पुरोहितोऽवदत्, "हे राजन्, धनधान्यादि सर्वं वस्तुजातं वस्तुतः वसुन्धरायाः उदरमेव वर्तते। तत्प्राप्तुं यतस्व।"

तदा पृथुभूपेन तदर्थं धनुः सज्जीकृतम्। तदा भूमिः स्त्रीरूपं धृत्वा तस्य पुरतः प्रकटिता अभवत् अवदत् च, "हे राजेन्द्र! तव पिता दुःखसकः वेनराजः राजधर्मस्य पालनं नाकरोत्। तदा मया चोरलुण्टकभयात् धनधान्यपुष्पफलानि मम उदरे निहितानि। त्वं तु प्रजाहितदक्षः नृपः। यदि त्वं प्रयत्नेन कृषिकार्यं करोषि तर्हि अहं प्रसन्ना भविष्यमि। अतः धनुः त्यज। खनित्राणि, हलान्, कुद्दालकान् लवित्राणि च हस्ते गृहीत्वा प्रजाजनैः सह कृषिकार्यं कुरु"।

भूमातुः उपदेशं मनसि निधाय पृथुवैन्यः नदीनां मार्गम् अवरुध्य कृषिकार्यार्थं जलस्य उपयोगम् अकरोत्। वृष्टिजलसञ्चयं कृत्वा जलव्यवस्थापनम् अकरोत्। भूमिम् उर्वरतमां कर्तुं प्रायतत। तदनन्तरं तस्मिन् क्षेत्रे जनाः धान्यबीजानि अवपन्। स नैकेभ्यः वृक्षेभ्यः विविधप्रकारकानां बीजानां सङ्कलनं चयनं च परिश्रमेण अकरोत्। अनन्तरं बीजानां संस्करणं कृत्वा वपनम् अकरोत्। पर्जन्यानन्तरं बीजेभ्यः अङ्कुराः उद्भूताः। धान्यलाभेन सर्वे प्रजाजनाः सर्वे सन्तुष्टाः च अभवन्। एषः कल्याणकारी नृपः पृथिव्यां प्रशासने अग्रणीः जनसेवाव्रती च अभवत्।



# सर्वेषां मुक्तिः

तेलुगु मूलम् - डॉ.श्रीनिवासदीक्षितुलु
संस्कृतानुवादः - श्री.बि.शिवकुमारः
चरवाणी - ८४६४९१२१८५
चित्राणि - के.द्वारकानाथः

तिरुकोट्टियूर्ग्रामे गोष्ठीपूर्णनामानः महापण्डिताः आसन्। पेरियनम्बि आज्ञानुसारं रामानुजाचार्याः तेषां दर्शनार्थं गत्वा....

आचार्याः!

दासोऽहं युष्माकम्। मह्यं तिरुमन्त्रं अनुगृह्णन्ति वा?



गोष्ठीपूर्णाः विमुखाः अभवन्

पेरियनम्बि माम् अगमयत्

आम् ....



पञ्चपर्यायाणाम् अनन्तरं गोष्ठीपूर्णाः...

त्वयि अभिसन्धानादयः अवलोकनीयाः

अवश्यम् आचार्याः!



श्रीरामानुजाः सप्तदशवारं तिरुमन्त्रोपदेशार्थम् आचार्यं प्राप्ताः चेत् अपि निष्फलाः विरक्ताः सन्तः शिष्यान् प्रति.........

इतः परम् उपदेशो न लभ्यते।

आचार्य! उद्विग्नो मा भव!



परम् एकस्मिन् शुभदिने शिष्येण रामानुजाय उपदेशार्थं सत्वरम् आगन्तुं सूचनां गोष्ठीपूर्णाः प्रेषितवन्तः। महदानन्देन १८ वारं रामानुजाः अगच्छन्। गोष्ठिपूर्णाः तेन....




कीदृशसन्दर्भेष्वपि एतत् मन्त्रं बहिर्गतं न भवेत्

आम्! स्वामिन्!



रामानुजाय गोष्ठीपूर्णाः तिरुमन्त्रम् उपदिदिशुः



उपदेशानन्तरं रामानुजाचार्याः सम्यग् विचिन्त्य, स्वार्थचिन्तनातः वरं लोककल्याणमिति अभिप्रयन्ति। शिष्यास्तान् कीर्तितवन्तः।




सत्वरं आचार्याः आलयगोपुरम् आरुह्य सर्वानाहूय अष्टाक्षरीमन्त्रम् उपदिदिशुः।




परं गोष्ठीपूर्णाः रामानुजान् आहूय कोपेन अभितर्जयन्ति...




तदाकर्ण्य गोष्ठीपूर्णाः ....




महदानन्देन गोष्ठीपूर्णाः रामानुजान् आलिङ्गन्ति।




तयोः गुरुशिष्ययोः सर्वोऽपि लोकः अनमत् ।



स्वस्ति



लोकाः समस्ताः सुखिनो भवन्तु।

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

बा ल वि नो दि नी

## रसप्रश्नाः

१.शल्यस्य सहोदरी का?

२. श्रीरामेण पालित राज्यं किम्?

३. पञ्चमहाकाव्येषु प्रथमं काव्यं किम्?

४. बृहत्कथा ग्रन्थस्य कर्ता कः?

५. इदानीं कः कल्पः प्रचलति?

६. ऋष्यश्रुङ्गस्य पिता कः?

(समाधानानि १. माद्री २. अयोध्या ३.रघुवंशः ४.गुणादयः ५.श्वेतवराहकल्पः ६.विभाण्डकः)

भेदाः कुत्र?

(१. कदली वृक्षः नास्ति २.मेघः नास्ति ३.पक्षीः नास्ति ४.मयूरः नास्ति ५. चिक्रोडः नास्ति हरिणी नास्ति ७. पर्वतः नास्ति)





ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः
यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः!
प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. देवव्रतः कयोः पुत्रः?
२. ब्रह्मर्षयः सत्रयागं कुत्र आयोजितवन्तः?
३. महाभारत रचनाकालः कति वत्सराः अभवत्?
४. द्रोणस्य प्रिय शिष्यः कः?
५. विवाहात् पूर्वं जातं पुत्रं किं वदन्ति?
६. परीक्षित् महाराजस्य पिता कः?
७. गर्भस्थं परीक्षितं कः रक्षितवान्?
८. वसुदेवः कस्मिन् वंशे सञ्जातः?
९. भागवते कति श्लोकाः सन्ति?
१०. पूर्व जन्मनः गजेन्द्रः कः आसीत्?
११. बलरामस्य माता का? देवकी
१२.''सत्यमेव जयते'' इति सूक्तिः कस्य उपनिषदे अस्ति?
१३. कर्णस्य अपरं नाम किम्?
१४. वेदव्यासस्य माता का?
१५. मण्डोदर्याः पतिः कः? रावणः

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| |

## नियमावलिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालकर्णस्य गुरुः कः? परशुरामःयाम् एव उत्तरं विलिख्य तत्पत्रं **The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507,** प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरः मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०४.२०२४ अस्ति।

**Subscription Number** :
**Name** :
**Mother** :
**Father** :
**Address** :
**Phone Number** :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

## तिरुमल श्रीवेङ्कटेश्वरस्वामिनः वसन्तोत्सवः 21-04-2024 तः 23-04-2024 पर्यन्तम् ।





## श्रीनिवासमङ्गापुरस्थ श्रीकल्याणवेङ्कटेश्वरस्वामिनः पुष्पयागमहोत्सवः 04-04-2024






SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-03-2024 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2024-2026" LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2024-2026" Posting on 5th of every month.



तिरुमल

श्रीरामस्वामिनः श्रीरामनवमि

आस्थान महोत्सवः

17-04-2024